इयं

# ॥ गायत्रीमन्त्रार्थविवृतिः ॥

पं० महानन्देन विरचिता

पं० विशनाथ एण्ड सन्स
"कश्मीर प्रताप स्टीम प्रेस" श्रीनगर में छपाया गया ॥
नम्बर ५७०३

# ॥ भूमिका ॥

ॐ सब से बलवान् कालबल ही है । इस लिए कलियुग के व्यतीतहुए २९ वर्ष अधिक पंचसहस्री तक हिन्दूधर्म प्रतिवर्ष प्रतिमास प्रतिदिन घटता ही है, अब तो इस समयपर सब तरह से बहुत अल्प चातुर्वर्णिकधर्म भारत में शेषरहा है । अधर्म प्रतिदिन वृद्धि पाकर अधिक से अधिक होगया है ॥ "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमिति" इस भगवद्वाक्य से विदित होता है । कि अवतार का समय पास आया होगा । परंतु कलियुग का प्रमाण अभी बहुत लम्बा है । इस हेतु से अवतार इस समय नही होने वाला है । तो भी उस परमकृपालु सर्वान्तर्यामी परमेश्वरने श्री (दर) जातीय धर्मध्वजावलम्बि

परोपकारादिगुणरत्न भूषित शरीरवाले काश्मीरिक महामात्र श्रीमान् बलभद्रजी को हृदय में प्रेरणा कियी, कि चतुर्वर्ग रक्षा धनपुत्रादि पदार्थ राज्य राजाधिराजपदवी से मुक्ति तक देने का गायत्री मंत्र को शक्ति है । इस लिए इस मंत्र का अर्थ प्रकाशन कराकर लोकों को समीचीनता से सुनाया जावे । जिस से मंत्रशक्ति की महिमा जानकर सभी जनता गायत्री के उपासक होगी । जिस से दारिद्र्य रोग आदिक दुःखवर्ग दूर करके जनता प्रोक्तफलों के भागी होगी । यही प्रेरणा होरही है । तो उन्हों ने इस काम करने के लिए मेरेको आज्ञा दियी है । उचित भी यह बात है, कि काश्मीरिक जनता के उद्धारक रक्षक इनके पूर्वज पिता पितामहादि होरहे हैं । इस लिए इनको ऐसी इच्छा का होना आश्चर्य नहीं है । परमेश्वर इन को ऐश्वर्यवाला बनाकर चिरजीवी करे ॥

विदात्मजः श्री(दर)जातिशेखरो लोकोपकाराय कुलानुसारतः
शिष्टिं व्यधादर्थप्रकाशने मयि वेदस्य मातुर्बलभद्रनामकः ॥ १ ॥
अकारि तच्छासन पालनं मया न मन्त्रसारार्थप्रकाशनं कृतम् । क
वेदक्षीराब्धिविनिर्गतं परं विशिष्टरत्नं क्व च मन्दधीर्मम ॥ २ ॥

## ॥ अथ मङ्गलाचरणम् ॥

ऊँ दाक्षिण्ये न कृतं तदा यदि भवेत्प्रेयान्निजो दक्षिणः को वामेन गुणस्तदा यदि भवेद्वामैववामा मम । इत्यालोच्य कृतस्पृहौ निज-शरीरार्धार्धसंयोजने भूयास्तां त्रिविधाभिधेयघटने ज्ञानप्रदौ मे शिवौ ॥ मन्त्रस्येति शेषः यदि निजः प्रेयान् पतिः दक्षिणोऽनुकूलः स्यात्तदा दाक्षिण्येन बुद्धितैक्ष्ण्येन कृतं सर्वं न तस्मादधिकं किञ्चित्कार्यं धियः अथवा यदि निजः पतिः दक्षिणः दक्षिणभागवर्ती तदा दाक्षिण्येन दक्षिणभागेण कृतमलम् । तेन न किञ्चित्कार्यं त्याज्यमित्यर्थमित्यर्थः ।

इति सर्वमङ्गलोक्तिः । यदि मम वामा सुन्दरी वामैव वामाङ्गभूतैव स्यात्तदा वामेन वामाङ्गेन को गुणः न कोपीत्यर्थः । अथवा यदि वामा सुन्दरी वामाङ्गा स्यात्तदा मे को गुणो न । अपि तु सर्वमेव गुणवत्तरमिति शिवोक्तिः । त्रिविधेति मायोत्तीर्णमायाशबलतया ब्रह्मणो द्वैविध्यं मायाशबलमपि हिरण्यगर्भप्राणात्मतया द्विधेति त्रैविध्यं । गायत्रीमन्त्रस्य वाच्यवाचकतया संयोजने पार्वतीपरमेश्वरौ ज्ञानप्रदौ मे भूयास्ताम् ॥ इति ॥

ओं वेदलोकसमीराणां सावित्री सारसंगता । मेधां दधातु सारांशा गायकत्राणतत्परा ॥

स्वयं सारांशभूता सावित्री वेदलोकसमीराणां सारांशेन ओंकारव्याहृति प्राणवायुना संगतासती गायकानां त्राणतत्परा पूर्वापरानुसन्धानवतीं मतिं दधात्विति ॥

श्रीगणेशाय नमः ।

# गायत्रीमन्त्रार्थविवृतिः ।

## ॥ अथोपोद्घातः ॥

ॐ त्रिपदा सावित्री त्रिवर्णात्मकः प्रणवः भूरादिव्याहृति-त्रयं चेति त्रयः सर्वपूरुषानुग्रहप्रवणेश्वरेच्छया त्रयीसारभूतास्तत्तुल्य-गुणा वेदत्रयात्प्रादुर्बभूवुः । तत्प्रमाणं, त्रिवर्णमयमोङ्कारं भूर्भुवःस्वरिति

प्रथमम् । पादत्रयं च सावित्र्या स्त्रयो वेदा अदूदुहन् । एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यत इति मनुवाक्यमवगन्तव्यम् । मथ्नाति सागरोमृतमिति वत् सौकर्यातिशय-द्योतनफलको दुहधातोः कर्मकर्तृप्रयोगः आर्षस्तु परस्मैपदपाठः ॥ वेदास्तु प्रकृतविषये दोहकर्तारः स्वयमेव बभूवुः येन चान्तरनवशे-षितसर्वसारांशदोहनं बभूव न तु लौकिकगोपालकर्तृकदोहवत्सर्वसारां-शदोहो न संबभूवेत्येषोऽर्थः स्फुटमेवात्र वेदशब्दस्य कर्तृतयावगम्यत इति ॥ विष्णुस्मृतावपि पञ्चपञ्चाशत्तमेऽध्याये लिखिता अकारंचाप्यु-कारं च मकारं च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च । त्रिभ्य एव च वेदेभ्यः पादं पादमदूदुहत् तादित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः । एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् । सन्ध्ययोर्वेदवि-द्विप्रो वेदपुण्येन युज्यते । ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः

त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखमिति ॥ स्मृतयोऽपि प्रकृतार्थविषये प्रमाणतयोपन्यस्ता इति । प्रजापतिशब्देनात्र वेदपुरुषोभिधीयते। प्रमाणतयोपन्यस्तस्मृति द्वयवाक्यान्तर्गतसावित्रीशब्दनिर्देशादस्यमन्त्रस्य सावित्रीत्वमेवास्ति व्याहृतिमेलनेन गायत्रीत्वं भजत्येष मन्त्रः ॥ भवति हि वेदेभिन्नसंहितान्तर्गतानामपि मन्त्राणां परस्परमेलनेनैकमन्त्रत्वम् । यथा तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयो दिवीव चक्षुराततमिति मन्त्रस्य तद्विप्रासो विपण्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमिति मन्त्रस्य च परस्परसंयोजनेन विष्णुदैवत एको मन्त्रः सम्भवतीत्यतोऽस्मिन्मन्त्रेपि भिन्नसंहितान्तर्गतानां पादानां सङ्ग्रहे काप्य दृष्टचरत्वादिरूपा शङ्का न वर्तते ॥ दरी दृश्यते हि लोकेचैतत् । सारवस्तूनां रत्नकल्पानां हस्तगतानां संगृह्यैकत्र स्थापनं क्रियते भाग्यवता महाजनेन । सद्भिश्च तत्पुत्रैर्यथा संभवमवाप्तं रत्नादिवस्तुजातं तत्रैव

सन्निधीयते यथा । तथैव वेदेपि लोकोद्धारमिच्छुः परमकृपालुः परमेश्वरो वेदानां सारभूतं पादत्रयमेकीकृत्यसंहितायां पपाठ । ऋषिभिः साक्षात्कृतधर्मैः सत्पुत्रैः त्रयीत एवाप्तं त्र्यक्षरसमष्टिरूपमोमित्यक्षरं भूरादिव्याहृतित्रयं चात्रैव त्रयीसारभूते मन्त्रे निबध्यते । युक्तं चैतत् । रत्नं समागच्छतु काञ्चनेनेत्यभियुक्तोक्तिमूलत्वात् । इत्येकायुक्तिकल्पनामन्त्रस्य व्याहृतिभिः संयोजने ॥

अथवा लोके सारभूतद्रव्याणां ह्युपभोगकालेऽन्यस्य सामान्यस्य वस्तुनो मिश्रणेन व्यवहरणं क्रियते जनेन न तु केवलानां यथाभिषग्भिर्मधुरिकासारवारिबिन्दुदाने सामान्यजलमिश्रणं क्रियते तेन च तस्यातितैक्ष्ण्यदोषनिवृत्तिपूर्वकं गुणवत्तरत्वं भवति । तद्वदृषिभिरपि श्रुतिसारभूतत्वान्मंत्रस्य प्रभावातिशयेनातिदुस्साध्यतया विश्वोत्तीर्णतया च विश्वमयस्य जनस्य ग्रहीतुमशक्यत्वाद्व्याहृतिभिर्विश्ववाचकत्वात्तन्म-

यीभिस्ताभिर्विश्वमयत्वं सम्पाद्योपासनासु प्रयुज्यतेऽसौ मन्त्रः ॥ गायत्रीमन्त्रस्य वेदसारत्वं मनुविष्ण्वादिस्मृत्यादिषु प्रसिद्धमेव । भूरादिव्याहृतित्रयस्य चाम्नायसारत्वेछान्दोग्योपनिषद्गता श्रुतिः प्रमाण्येनोपन्यस्यते ॥ स एतां त्रयीविद्यामभितपत्तस्यास्तप्यमानाया रसान्प्रावहद्भूरिति ऋग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्य इति । व्याहृतीनां संयोजने द्वितीयैषा कल्पना ॥

सर्वस्मिन्क्रियाकलापेमनसो व्यग्रतया वाचा मन्त्रोच्चारणे तदूहापोहे क्रियापौर्वापर्ये च न्यूनाधिकभावोऽवश्यं संभवति । तेन तथाविधक्रियाकर्ता पापीयान्भवति । तद्विनाशार्थं यज्ञपूजनादिरूपक्रियाकलापसमाप्तौ । यथायोग्यं श्रुतिव्याहृतिहवनक्षमापणपाठादिकं मुनिविद्भिर्नियतं करोति क्रियाकर्ता । एवमेव सर्वासां समन्त्रकाणामुपासनानां मन्त्रोच्चारणकाले मनसो व्यग्रतयान्यूनाधिकभावः सम्भवितुमर्हति तथात्वेच गायत्रीम-

ओपासकश्च पापीयान्भवितुमर्हत्येवेति मनसिनिधाय भूरादिव्याहृतित्रयं मन्त्राङ्गभावं मुनयो निन्युः । दोषपरिहारफलकाश्च भूरादिव्याहृतयो ब्रह्मणा सम्पादिताः । तत्प्रसङ्गः छान्दोग्योपनिषदि सप्तदशे खण्डे सविस्तरं प्रकाशितः । तद्यथा। तद्यदृचोरिष्येद्भूःस्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिं सन्दधाति ॥ १ ॥ अथ यदि यजुषोरिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिं सन्दधाति ॥ २ ॥ अथ यदि सामतोरिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिं सन्दधाति ॥ ३ ॥ सव्याहृतिगायत्रीमन्त्रजपेन चित्तविक्षेपकृतो दोषस्तत्कृतप्रत्यवायश्च कार्यसिद्धि पूर्वकालिकश्रम इव कार्यसिद्धौ विनाशमुपगच्छति । इति तृतीया युक्तिकल्पना ॥ ३ ॥

व्याहृतित्रयं विना केवलसावित्र्युपासनं निर्गुणविश्वोत्तीर्णब्रह्मोपासनोपयोगि तेनच गुणातीतो विश्वोत्तीर्णो मोक्षाख्यः पुरुषार्थ एवाप्यते जनेन न तु ब्रह्मचर्यादित्रैयाश्रमिकजनाभिलषितत्रिवर्गावाप्तिः स्यादिति विचिन्त्य विश्वमयव्याहृतिमिश्रणेन सगुणब्रह्मोपासना साधिता मुनिभिः । येन च लोकत्रयसाम्राज्यं वेदत्रयपुण्यं प्राणादिवायुत्रयस्वास्थ्यपूर्वकं तज्जयंचाप्नोति साधकः तथा च ब्राह्मणम् । भूः स्वाहेति भूमिर्वै द्विपदश्चतुष्पदष्पदश्चैव तेन वृध्यंते ॥ भुवः स्वाहेत्यन्तरिक्षं वै वायुर्देवतास्तेन वासवः प्रीणन्ति ॥ स्वः स्वाहेति वाचो मे प्राणापानौ सम्राट् चक्षुषस्तेन प्रीणातीति द्विपदचतुष्पद शब्दाभ्यामैश्वर्यं वायुशब्देन प्राणाः वाचःशब्देन वैदिकावाच उपलक्ष्यन्ते ॥ एतन्मन्त्रोपासकस्योद्दिष्टफलावाप्तिर्वृहदारण्यकोपनिषदि च पञ्चमाध्याये चतुर्दशब्राह्मणे स्पष्टमभिहिता तद्यथा । भूमिरन्तरिक्षं

द्यौरित्यष्टावक्षराण्यष्टाक्षरं हवा एकं गायत्र्याः पादमेतदुहैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावज्जयति योऽस्या एतदेवं पादं वेद ॥ १ ॥ ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं हवा एकं गायत्र्याः पादमेतदुहैवास्या एतत्स यावतीयं त्रयी विद्या तद्धजयति योऽस्या एवं वेद ॥ २ ॥ प्राणोऽपाणो व्यान इत्यष्टावक्षराण्यष्टाक्षरं हवा एकं गायत्र्याः। पादमेतदुहैव एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एवं पादं वेदेति ॥ ३ ॥ इति चतुर्थीयं युक्तिकल्पनाः ॥

अथाधुनैतस्य मन्त्रस्यार्थो निर्णीयते स चार्थो निर्गुणब्रह्ममायाशवलविषयतयाद्विधा मायाशवलश्च हिरण्यगर्भप्राणादित्यतया द्विविधः तत्र शुद्धब्रह्मवाचकता यथा ॥ ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृत इति श्रीभगवद्गीतान्तर्गतपद्यप्रमाणितशुद्धब्रह्मवाचकेन तदिति शब्देन

स्वतः सिद्धं ब्रह्मोच्यते । सवितुरित्यनेन सृष्ट्यादिशक्तित्रयोपलक्षितै-श्वर्यवैशिष्ट्यं जगदभिन्ननिमित्तोपादनकारणत्वं वास्यैव ब्रह्मणः कथ्यते वरेण्यमिति सर्वजनस्य स्वरूपत्वेनानुकूलत्वादानन्दंब्रह्मेत्यादि श्रुतिसिद्ध-निरतिशयानन्दास्पदत्वाद्वरणीयं स्पृहणीयम् । भर्गइत्यनेनाविद्यातत्कृत-दोषसंहतिभर्जनपर्याप्ततेजस्कत्वस्वरूपवत्त्वं समार्थितं भवति । देवस्येति सर्व-द्योतनात्मकत्वं स्वातन्त्र्यक्रीडाशीलत्वं सर्वगतत्वं च ब्रह्मणो ज्ञायते सवितुर्भर्ग इत्यत्रशक्तिशक्तिमतोर्भेदपक्षे देवदत्तस्य शक्तिरितिवत्समीची-नाषष्ठी तेजस्तेजस्विनोरभेदपक्षेत्वौपचारिकी सवितृशब्दविशेषणतया देव-स्येति षष्ठ्यपि समर्थिताभवति ॥ तदित्यादि पदनिर्दिष्टं भूतमऽभिन्न-निमित्तोपादानकारणं निरतिशयानन्दस्वरूपमविद्यानाशकं स्वप्रकाशं ब्रह्म-धीमहि अधीष्टेलिङ् एवं विधं शुद्धं ब्रह्मस्वमनसि सत्कारपूर्वकं तत्स्व-रूपावाप्तये चिन्तयामः अभेदपूर्वकं साक्षात्कुर्मः तदित्यर्थः ॥ सद्ध-

क्तिभावपूतेन स्वामिभृत्यभावेन भजामहेवा ॥ प्रसिद्धं हि लोके क्लेशकाले तदपहत्यै पितरावीश्वरं वा चिन्तयति सर्वो जनः एवमेवानादिकालप्रवाहपतितोऽविद्योपाधिको जीवोऽहं संसारमरुभ्रमणासह्यपञ्चविधक्लेशक्लिष्टः पितृस्थानीयमविद्याभर्जकं ब्रह्माविद्याविनाशाय चिन्तयामि ॥ एतदपि लोके प्रसिद्धं यत्र क्वापि सद्भक्तिभावपूतः स्वामिभृत्यभावो वर्तते तत्र भृत्यायेष्टाधिकं स्वाधिकारदानमपि नाद्भुतं स्वामिनः का वार्तान्यवस्तुदानेषु । इत्थमेव जीवायब्रह्मभूयदानं न चित्रमित्यतः तदवाप्तये तदेव भज इति तत्त्वमसीति महावाक्यबोधितार्थसमानतात्पर्यार्थो मन्त्रपादद्वयार्थ इत्यतो निर्गुणब्रह्मनिरूपणं नास्य मन्त्रस्य विरुध्यते ॥ बुद्ध्याद्यन्तःकरणवर्गचोदकत्वं चास्य ब्रह्मणो धियो योनः प्रचोदयादित्यनेन निर्दिश्यते तेन चान्तर्यामित्वं सदाहृदयसानिध्यं चास्य गम्यते । अविप्रकृष्टतया ब्रह्मणस्तदुपासनायाः सुसाध्यत्वमभिव्यज्यते ॥

यद्वा प्रचोदयादित्यत्र प्रार्थनायां लिङ् यच्छब्देन पादद्वयनिर्णीतं ब्रह्म निर्दिश्यते योऽयं निष्कलः परमेश्वरो नो धियो ब्रह्मैक्यप्रतिपादिका धीवृत्तीः प्रेरयत्विति प्रार्थना । न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति धिया संचोदयन्ति तमित्यभियुक्तोक्त्याऽभीष्टफलसाधनसमर्थविषदबुद्धिदानफलकत्वं समर्थितं देवप्रसादस्येति ॥ चतुर्दशभुवनपर्यायं भूरादिव्याहृतित्रयं प्रणवेण समन्वेति तेनोंकारवाच्यब्रह्मात्मका भूरादयो लोका इत्येपोर्थः सर्वं खल्विदं ब्रह्मेति महावाक्यार्थेन संगच्छते ॥ इत्थमेव च श्रीशिवोपाध्यायकृते गायत्रीनिर्णये प्रोक्तम् । तद्यथा ओंभूर्भुवः स्वरिति लोकत्रयमस्तीत्यन्वयः यदियं प्रसिद्धालोकत्रयकल्पना । तदोंकारःपरमेश्वरएवभवतीत्यर्थइति । अनया रीत्या ब्रह्मणि सर्वं दृश्यवर्गं जगद्विलाप्य तत्सवितुरित्यादिमन्त्रार्थचिन्तनेन स्वात्मानमपि तद्रूपेणैव भावयति साधक इत्यतोप्य-

स्मिन्मन्त्रेऽव्याहृतिसङ्गतिर्मुनिकृता समीचीनैव वरीवर्त्ति ॥ श्रीशङ्कराचार्यवर्याणामपि संमतिरत्रार्थे जरीगृह्यते साच यथा ॥ तदित्यवाङ्मनोगम्यं ध्येयं यत्सूर्यमण्डले सवितुः सकलोत्पत्तेः स्थितिसंहारकारिणः ॥ वरेण्यमाश्रयणीयं यदाधारमिदं जगत् । भर्गः स्वसाक्षात्कारेण ह्यविद्याकार्यदाहकम् ॥ देवस्य ज्ञानरूपस्य स्वानन्दाक्रीडितस्य वा धीमह्यहं स एवेति तेनैवाभेदसिद्धये ॥ धियोन्तःकरणवृत्तीः सम्यक्प्रणवचारिणीः । यइत्यऽलिङ्गधर्मं यत्सत्यज्ञानादिलक्षणम् ॥ नोस्माकं बहुधाभ्यस्तभेदभिन्नदृशां तथा प्रचोदयात्प्रेरयतु प्रार्थने लिङ् विशिष्यते ॥ आपो ज्योती रस इति सोमोऽग्निस्तेज उच्यते । तदास्माकं जगत्सर्वं रसतेजोद्वयात्मकम् ॥ अमृतं तदनाशित्वाद्बृहत्त्वाद्ब्रह्मचोच्यते । तद्भूर्भुवःस्वरित्युक्तं सोहमर्थमुदाहृतम् ॥ यो देवः सवितास्माकं धियो धर्मादिगोचरान् । प्रेरयेत्तस्य तद्भर्गस्तद्वरेण्यमुपास्महे ॥

आदित्यमण्डलान्तर्गतहिरण्यगर्भाभिधानपुरुषलक्षणमायाशबलब्रह्मार्थबोधकतास्य मन्त्रस्य यथा। तदिति तदः सर्वनामत्वात्सर्वसामान्यं जगत्प्रकाशकतया प्रसिद्धं भर्गो बाह्याभ्यन्तरवर्तिध्वान्तजाड्यविनाशकं स्वप्रकाशं सर्वानुभूतमादित्यमण्डलस्थपुरुषस्वरूपतया केवलौपनिषद्गम्यं तेजोराशिः सवितुः स्वकिरणनिकरपूरितचतुर्दशभुवनस्य तमःकाण्डापहारपूर्वकं तन्मलीमसीभूतस्य जगतः स्वस्वकार्यतत्परकरणेन दत्तैश्वर्यस्य वा ईदृग्गुणवतः सूर्यस्य तन्मण्डलान्तर्गतहिरण्यगर्भाख्यपुरुषस्य च संबन्धि वरेण्यं वरणीयं निष्कारणमेव जगतोध्वान्तनिवृत्त्या निर्मलीभावापादनेन बुद्धिस्थजाड्यापहारेण धीनिर्मलीकरणेन वा स्पृहणीयम् । देवस्यान्नाद्यौषधिगणपाचकतया सृष्ट्यादिक्रीडाशीलस्य शुभाशुभकर्मव्यवहारसाक्षिणः श्रुतिस्तुत्यस्य सर्वभुवनप्रकाशककान्तिमतः सम्बन्धि भर्गो धीमहीति ध्यानविषयंकरोमि स्वमनसा प्रत्यक्षीकरोमि उपासना-

विशेषेण स्वहृदयगोचरं करोमि । तृतीयपादेन सूर्यस्य तद्गतपुरुषस्य च प्रसिद्धां स्वाभाविकीं क्रियां प्रदर्शयति श्रुतिः । यत्तदोर्नित्यसंबन्धइतिनीत्यातच्छब्दनिर्दिष्टसवितृतजो यच्छब्देनानूद्यते योदिवाकरोनःसर्वजनप्रत्यक्षमुदयमानः धियः किरणान्दशसु दिक्षु प्रचोदयात्प्रेरयतीति लडर्थेलिङ् प्रयोगः छान्दसः । यद्वा भास्करो नोस्माकं धियोन्तःकरणवृत्तीः स्वापमपहाय व्यवहृत्युन्मुखीभवनाय प्रेरयति । अनेन बुद्ध्यादि सर्वं जडं करणवर्गं शरीरं च चेतयत्यसाविति ज्ञापितं भवति ॥ अथवा मन्त्रोपासकस्य फलमाविष्करोति तृतीयपादेन श्रुतिः । यो मन्त्रपादद्वयनिर्णीतोध्येयस्वरूपावस्थित अदित्यमण्डलान्तर्गतः पुरुषाकारस्तेजोराशिर्बुद्ध्यधिदेवोनोऽस्माकं धियः धीवृतीर्मोक्षफलकस्वस्वरूपप्रत्यक्षीकरणाय दुरवगाहशास्त्राम्भोधिपारगमनायायुर्वृद्धये लोकत्रयसाम्राज्यफलकनीतिमार्गप्रवृत्तये च प्रचोदयात्प्रेरयेदिति प्रार्थनायां लिङ् ॥ प्रकृतार्थवि-

विषये प्रमाणानि यथा श्रीनिरुक्ते थप्रमाध्यायस्य द्वितीये पादे ऋग्यजुःसामाथर्वात्मकब्रह्मराशेरादित्यान्तर्गतपुरुषदृष्टत्वमैतरेयकब्राह्मणे श्रुतं। कथं पृथक् पृथक् श्रुतीनामार्षत्वं कल्पत इत्यनुयोगे सूर्यमण्डले हिरण्यगर्भाभिधानपुरुषास्थितिः स्पष्टमभिहिता भवति ऐतरेयकरहस्यब्राह्मणमप्येतदर्थे प्रमाणं दत्तं तत्रैव एतदनुयोगान्तरसमर्थनग्रंथे बुद्धिदेवतात्वेन हिरण्यगर्भः क्षेत्रज्ञोऽवस्थितः सर्वभूतानां कर्मविपाकानुसारेण यमर्थं शब्दं वा दर्शयति तादितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यतीत्यन्तेन वाक्यजालेन जीवः स्वबुद्ध्या किमपि न शक्नोति शक्यते च तेनबुद्ध्यधिदेवभूतादित्यमण्डलान्तर्गतपुरुषसाहाय्यवत्या धिया सर्वज्ञातुमिति गम्यत इत्यत उचितैवाधिदेवविषयिका प्रार्थना या मन्त्रतृतीयपादेनाभिधीयते । पुनश्च श्रीनिरुक्ततृतीयाध्यायस्य द्वितीयपादान्त उदाहृता श्रुतिः प्रमाणभूता यथा । यत्र सुपर्णा अमृतस्य भागमनि-

मेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपः स मा धीरः पाकमत्राविवेश ॥ अस्यार्थः यत्र यस्मिन् मण्डलेऽवस्थिताः सुपर्णाः सुपतना आदित्यरश्मयः ते हि शोभनमर्थमुद्दिश्य तमोविघातलक्षणं पतन्ति अथवा शोभमानाः पतन्तीति सुपर्णाः ते किं कुर्वन्ति उच्यते अमृतस्य भागमुदकस्य भागं भजनीयमंशमादाय पृथिवीलोकात्तेनान्विताः सन्तः सर्वभूतान्यभिस्वरन्ति स्वशब्दोपतापनयोरभितपन्तीत्यर्थः अथवाभिस्वरन्त्यादित्यमण्डलम् आभिमुख्येन रसान् गृहीत्वा प्रयान्ति अनिमिषन्त अनिमिषमाणा इत्रादरवन्त इत्यर्थः वेदनेन स्वकर्माधिकारयुक्तेनान्विताः सन्तः इदमेवास्माभिः कर्तव्यमादानादिलक्षणं कर्मेत्यभिस्वरन्ति यत्रैवं लक्षणं कर्म कुर्वन्त्यादित्यरश्मयः तत्र किं उच्यते । इनो विश्वस्य भुवनस्य गोपा इन ईश्वरः इनो ह्यसावादित्य ऐश्वर्येण भवति विश्वस्य भुवनस्य सर्वेषां भूतानां गोपाः गोपा

यिता भवति आदित्यमण्डलान्तर्गतपुरुषो यस्तत्र मण्डलेवस्थितः स मा धीरो धीमान् प्रतिविशिष्टयाबुद्ध्यान्वितः बुद्धिरेव हि तस्य शरीरम् पाकः पक्कव्यः पक्कव्यप्रज्ञो विपक्कप्रज्ञः सम्यग्दर्शनानुग्राह्यतयाऽऽविवेश आविशतु इति । प्रत्यक्षसिद्धंदशकाष्टाव्यापनं सूर्यरश्मीनां श्रुतिरपि वेदयति । इनो विश्वस्य भुवनस्य गोपा, इत्यनेन भागेन वर्षणतापाभ्यामन्नादिसम्पादनद्वारा भुवनपालकत्वं च द्वादशात्मन आशास्ते । चतुर्थपादेन जीवप्रज्ञायामादित्यान्तर्गतपुरुषस्य प्रवेशं च वक्तीति सर्वथाप्रोक्तार्थोपोद्बलकारिण्येषा श्रुतिः ॥ श्रीनिरुक्तद्वितीयाध्यायस्य उदाहृता ऋक्प्रकृतमन्त्रपादद्वयार्थानुवादकतयो पन्यस्यते यथा ॥ उतादः परुषे गवि सूरचक्रं हिरण्ययम् न्यैरयद्रथीतमः ॥ अत्रार्थः उतादः उत अपि अथ इति च्छन्दसि समानार्थाः अपि रसानादत्ते अपि तमांसि अपहन्ति अदः असिन्नादित्यमण्डले परुषि पर्वभिः तद्वति अथवा भा-

स्वति भासा तद्वति अहोरात्रादिपर्वतद्वतीत्यौपमन्यवः गवि गमनशीले मुहूर्तमप्यनवस्थायिनि सूरः सूर्यः अवस्थितः पूषा आदित्यमण्डलान्तः पुरुषः तदेव पर्ववद्भास्वद्वा चक्रं चकनं क्रमणं वा गमनशीलं मण्डलं हिरण्ययम् तेजोमयं चक्राकृति न्यैरयत् नियतगमनवृत्तिना मार्गेण नित्यकालमीरयति उदयास्तमयमध्यन्दिनकालोपलक्षणार्थम् । अथवामुष्मिन्मण्डले वस्थितः भगवान् सूर्यो लवनिमेषक्षणमुहूर्ताहोरात्रार्थमासमासर्त्वयनसंवत्सरलक्षणं कालचक्रं सर्वभूतहारि हिरण्ययं तेजोमयं सर्वभूतस्थितिविनाशहेतुं न्यैरयत् नित्यमीरयति कीदृशः पुनः सः सूर्यः रथीतमः अन्येपि रथिनः सन्ति अयं तु मुहूर्तमप्यनवस्थित इत्यतो रथीतमः स एवं गुणयुक्तः पूषा तं वयमभिप्रेतार्थसिद्धये स्तुम इति ॥

एतन्मन्त्रोपासकस्योद्दिष्टब्रह्मस्वरूपावाप्त्यादिफलानां प्राप्तौ प्रमाणानि

यथाक्रममुपन्यस्यन्ते अनयादित्योपासनया ब्रह्मप्राप्तिर्भवतीत्यत्र बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य पञ्चदशतमं ब्राह्मणं प्रमाणं यथा । हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ अत्रार्थः अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इत्युक्तम् येन मार्गेणामृतत्वमश्नुत इत्युच्यते तद्दतं तत्सत्यमसौ स आदित्यः य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे चक्षुरुष एतदुभयं सत्यं ब्रह्मोपासीनो यथोक्तकर्मकारी यः सोऽन्तकाले प्राप्तेसत्यात्मानमात्मनः प्राप्तिद्वारं याचते हिरण्मयेन पात्रेण हिरण्मयमिव हिरण्मयं ज्योतिर्मयमित्येतत् तेन पात्रेण वा पिधानभूतेन सत्यादित्यमण्डलस्थस्य ब्रह्मणो पिहितं छादितं मुखं द्वारं हेपूषन् जगतः पूषणात्पूषा सविता अपावृणु सत्यधर्माय तव सत्यस्योपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मस्तस्मै मह्यम् अथवा यथा भूतस्य धर्मस्यानुष्ठातुर्दृष्टये तव

सत्यात्मन उपलब्धये ॥ वाजसनेयोपनिषद्यपीत्थं श्रुतयः तदर्थवाचिका निर्दिष्टायथा॥ पूषन्नेकर्षे यमसूर्यप्राजापत्यव्यूहरश्मीन् । समूहतेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ॥ पूषन्नित्यादीनि नामान्यामन्त्रणार्थानि सवितुः एकश्चासावृषिश्चैकर्षिः दर्शनादृषिः स हि सर्वस्य जगत आत्मा चक्षुश्च सन्सर्वं पश्यति एकोवागच्छतीत्येकर्षिः सूर्य एकाकी चरतीति यमसर्वं हि जगतः त्वत्कृतं संयमनं सूर्यसुष्टु ईरयते रसान्रश्मीन्प्राणान् धियो वा जगत इति प्राजापत्यप्रजापतेरीश्वरस्यापत्यं हिरण्यगर्भस्य वा व्यूह विगमय रश्मीन् संक्षिपात्मनस्तेजो येनाहं शक्नुयां त्वत्सुरूपमञ्जसा द्रष्टुम् । विद्योतनरूपाणाम् अत उपसंहर तेजः यत्ते तव रूपं सर्वकल्याणानामतिशयेन कल्याणं कल्याणतमं तत्तेपश्यामि पश्यामो वयं वचनव्यत्ययेन योऽसौ भूर्भुवः स्वर्व्याहृ-

त्यवयवः पुरुषः पुरुषाकृतित्वात्पुरुषः सोऽहमस्मि भवामि सोऽहमस्म्यमृतमिति संबन्धः ममामृतस्य सत्यस्य शरीरपाते शरीरस्थो यः प्राणवायुः सोऽनिलं बाह्यं वायुमेव प्रतिगच्छतु तथान्यादेवताः स्वां स्वां प्रकृतिं गच्छन्तु अथेदमपि भस्मान्तं सत्पृथिवीं या तु शरीरमिति ॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इति स्मृतिरप्युक्तार्थे प्रमाणमिति ॥

गायत्री वा इदं सर्वं भूतं यदिदं किञ्चित् वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति त्रायते च १ यावैसा गायत्रीयं वाव सा येयं पृथिव्यस्यां हि सर्वमिदं भूतं प्रतिष्ठितमेव च नातिशीते २ इत्यादिकं नवर्चं ब्राह्मणं छान्दोग्योपनिषदि तृतीयाध्यायस्य द्वादशे खण्डे ग्रथितं गायत्र्युपासना हि ब्रह्मोपासनेन्यत्र प्रमाणं सदस्या उपासनाया ब्रह्मावाप्तिफलकसाधनतामर्थतः सूचयति । अन्तिमया ऋचाविनश्यच्छ्रीलाभसु-

पासकस्य शास्ति। कौतुकिभिरानन्दगिरिटीकासंवलितशङ्करभाष्ये श्रुत्यर्थः प्रकृतार्थस्य बुद्ध्यारूढायावधार्य इति ॥ सवितृतेजो ब्रह्मतेजसाभिन्नमित्येषोऽर्थः छान्दोग्यतृतीयाध्याये सप्तदशे खण्डे चरमायामृचि श्रीशङ्कराचार्यैः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादि श्रुतिभिर्निर्णीतः निर्दिष्टोपनिषदि निर्दिष्टाध्यायस्यैकोनविंशखण्डे अथ यत्तदजायतेति निम्रेडेरन्निति च ऋग्द्वयमप्यादित्ये ब्रह्मोपासनाया प्रमाणमिति चतुर्थयुक्तिकल्पनायां लिखितानि प्रमाणानि गायत्रीमन्त्रोपासकस्य यथाक्रमं त्रिलोकजयं कैमुतिकन्यायेन सार्वभौमराज्यं श्रीपात्रत्वं त्रयीजयं तदङ्गतया षडङ्गषट्दर्शनपुराणादिविद्यारत्नाकरत्वं प्राणापानव्यानजयं तन्मूलभूते शरीरस्वास्थ्यपूर्णायुष्मत्त्वे चावबोधयन्ति ॥ लोकोपयोगिन्यः क्षुद्रसिद्धयो वरशापादयो वशीकरणादयः परचित्ताभिज्ञानादयो वाक्सिद्धयश्च किङ्करायन्ते । प्रजावान्पशुमान्रयिमानायुष्मन्तं करोति

तस्माद्गायत्री आयुरिव परमं कामं गायत्र्याभिप्रतितिष्ठति य एवं वेदे-त्यनेन गायत्र्युपासकस्य प्रजापशुधनायुष्मत्वंगमयतिगायत्रीब्राह्मणमपि ॥ इतिनिर्दिष्टचतुर्विधपुरुषार्थफलावाप्तये प्रमाणानि प्रदर्शितानि ॥ मन्त्रेभू-रादिव्याहृतित्रयं भर्गशब्देन संबध्यते तेनसप्तलोकव्यापको यत् भर्गः सूर्य-मण्डलान्तर्गतपुरुषाकारस्तेजोराशिस्तं धीमहीतिरीत्याजापकस्य च महा-प्रभाववत्त्वं वर्णितं भवतीति ॥

प्राणादित्यार्थप्रकाशनं यथा प्रसिद्धं चैतल्लोकेशिल्पिनैपुण्यम् । यन्महतो वस्तुनोल्पतया चित्रणम् अल्पस्य च महताकारेण प्रकाश-नमिति ॥ जगच्छिल्पनिर्माणकाले ह्यादिशिल्पिना ब्रह्मणा देवमनुष्य-पश्वादिप्राणिवर्गचराचराश्रयभूतचतुर्दशभुवनात्मके ब्रह्माण्डे सर्वाणि वस्तुजातानि स्वेन स्वेनाकारेण सविस्तरं निर्माय तत्तद्गुणविशिष्टा-स्तत्प्रतिनिधयश्चाल्पाकारेण चक्रिरे यथा गङ्गाद्यनन्ततीर्थाश्रयभूतं स-

विस्तरमार्यावर्तं संक्षेपतः तत्प्रतिनिधिं तत्तद्देवतास्थानचिह्नितं कश्मीरदेशं च व्यरचयद्विधिः । इत्थमेव ब्रह्माण्डे ये गुणाः प्रोक्ताः शरीरे ते व्यवस्थिता इत्यादि पौराणिकनयेन प्रमाणितानि चतुर्दशभुवनोम्भितब्रह्माण्डप्रतिनिधावस्मिन्मनुष्यशरीरे पादादिनाभ्यन्तं पातालादिसप्तभुवनानि तत्तद्गुणविशिष्टानि नाभितो ब्रह्मरंध्रान्तं भूरादिसप्तलोकानि चतुराननादिदेवसहितानि ब्रह्मणाव्यवस्थापितानि सन्ति । योगिनश्च तथात्वं प्रत्यक्षीकुर्वन्ति । व्यवरन्ति च तत्तल्लोकस्थदेवैरवाप्नुवन्ति च तां तां सिद्धिमिति ॥ तत्र ब्रह्माण्डान्तर्गतमहाकाशे सूर्य उद्यन्सर्वाणि भूतानि चेष्टयन्यथोचितकाले तापवर्षादिदानेन सस्यानि विपाकं नयंस्तेन सर्वप्राणिनो जीवयन्सहस्रपरिमिताभिर्भाभिः चतुर्दशभुवनानि व्याप्यैकदेशस्थोपि परिचरन्वर्तते । एवमेव प्राणादित्यो हृदयाकाशस्थः सवित्रायते । शरीरे हि प्राणस्यैवादित्य-

स्वमुपनिषत्सु गीयते । तत्प्रमाणं च मैत्रेयोपनिषदि षष्टप्रपाठके यथा ॥ द्विधा एष आत्मानं बिभर्त्ययं यः प्राणो यश्चासावादित्योऽथ द्वौ वा एतावस्य पन्थाना अन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेते ॥ अत्रार्थः एषः पूर्वप्रकृत आत्मा वै प्रसिद्धः सर्वश्रुतिषु द्विप्रकारेणात्मानं स्वरूपं बिभर्ति धत्ते प्रकारभेदं विशदयति यः प्राणो देहे पञ्चधात्मानं विभज्यस्थितोस्तीयमेका विधा यश्चासौ ब्रह्माण्डकरण्डे जगदवभासकतयावास्थितोस्त्यादित्यः सेयमपराविधेत्यर्थः ॥ अध्यात्मं प्राणात्मनाधिदेवात्मना ब्रह्मरूपश्चिदात्मा ध्येय इत्युपासनोत्पत्तिं सूचयन्नाह अथेदमुच्यते । अस्यात्मन एतौ द्वौ पन्थानौ विशेषाभिव्यक्तिस्थानौ कौ अन्तः देहाभ्यन्तरं बहिश्च देहात् आध्यात्मरूपो बाह्यो देशश्चेति पन्थानांवित्यर्थः एतौ च प्राणादित्यौ अहोरात्रेण अह्ना रात्र्या च व्यावर्तेते व्यावर्तनं कुरुत इत्यर्थः ॥

अन्तः किं रूपो बहिश्च किं रूपो वर्तते कथं च तन्न्यावर्तनमित्येतद्विशदयति ॥ असावादित्यो बहिरात्माऽन्तरात्मा प्राणोऽतो बहिरात्मिकया गत्यान्तरात्मनोऽनुमीयते गतिरित्येवं ह्याह ॥ असौ प्रसिद्धो वै आदित्यः सूर्यो बहिरात्मा यत एवमतोबहिरात्मन इयं बहिरात्मिकी तत्प्रयुक्तेति यावत् तया बहिरात्मिकया गत्या परिवर्तनेनान्तरात्मनः प्राणस्य गतिरनुमीयते इत्येवं प्रकारं हि यत अहागमज्ञः अतस्तयोर्न वास्तवो भेद इति शेषः अयमाशयः सूर्यो हि मेरुं प्रदक्षिणीकुर्वन्नहोरात्राभ्यां ब्रह्माण्डं परिवर्तते प्राणोपि श्वासोच्छ्वासाभ्यां देहान्तः परिभ्रमति तत्रैकाहोरात्रसूर्यगत्या प्राणस्यैकविंशतिसहस्रसंख्याः श्वासा भवन्तीत्यागमशास्त्रप्रसिद्धम् ॥

इदानीमन्तरात्मगत्या बहिरात्मनो गत्यनुमानप्रकारमाह । अथ य इति । अथ यः कश्चिद्विद्वानपहतपाप्माक्षाध्यक्षोऽवदातमनास्तन्निष्ठ आवृ-

त्तचक्षुः सोन्तरात्मिक्या गत्या बहिरात्मनोनुमीयते गतिरित्येवं ह्याह । स्पष्टोऽर्थः ॥ अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां हिरण्यवस्थानात्स एषोऽन्तरे हृत्पुष्कर एवाश्रितोन्नमत्तीति ॥ हिरण्मयो ज्योतिर्मयः इमां त्रैलोकीम् हिरण्यवस्थादिति हिरण्ये हिरण्मये तेजःसङ्घातमके मण्डले अवस्थानात्तदभेदेनावस्थानादित्यर्थः । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यवोपसर्गेऽवर्णलोपः शेषः स्पष्टार्थः। स एष प्राणादित्यो हृदयाकाशस्थः शतं चैका हृदयस्य नाड्य इत्यादिमुण्डकश्रुत्या नाडीभिः सर्वं शरीरमभिव्याप्य चेष्टयते जीवन्तं करोति द्विदलादीनि सहस्रदलपर्यन्तानि कुलपथस्थितानि कमलानि विकासयति चेति सर्वथा प्राणस्यादित्यत्वं श्रुतिभिः सिद्धम् । युक्त्या च साध्यते । सा च यथा महाकाशे हि द्वादशराशयः तासामेव त्रिंशता गुणनं विधाय षष्ट्यधिकं शतत्रयं अंशरूपेण सञ्जायते ते

चांशाः षष्ट्या सङ्गुण्यैकविंशतिसहस्राणि षट्शताधिकानि कलारूपेण जायन्ते । एतावत्कलात्मकं सर्वं व्योमैकेन हायनेन परिसरति सूर्यः एव-मेवाकाशप्रतिनिधिभूते मनुष्यशरीरे द्वादशदलात्मनः पद्मस्य द्वादशद-लानि मासकलनया परिकल्पयन्ति योगिनः तत्र द्वादशदलं पद्मं त्रिंशता संगुण्य षष्ट्यधिकानि त्रीणि शतानि संभवन्ति तानि च षष्ट्या संगुण्य षट्शताधिकान्येकविंशतिसहस्राणि श्वासोच्छ्वासरूपाः प्राणगतयो भवन्ति ताभिः प्राणादित्यः शरीरं व्याप्नोति । वर्षपर्यन्तं बाह्यक्रियाभिर्यं सुकृतमधितिष्ठते पुरुषस्तमेवान्तरक्रिययाहोरात्रेणाधिग-च्छतीति ॥ एवं श्रुतियुक्तिभ्यां प्राणस्यादित्यत्वं साधितं भवति तेनच गायत्रीमन्त्रेण प्राणादित्योपासना भवितुमर्हत्येव । अस्या उपासनाया बहिरात्मिक्या उपासनायाः श्रैष्ठ्यं च वर्तते बाह्यादित्योपासनया यत्पुण्यं संवत्सरेणावाप्यते तत्प्राणादित्योपासनयाहोरात्रेणैव लभ्यत

इति श्रैष्ठ्यप्रयोजकम् । सांबपञ्चांशिकायामपि देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्य इत्यस्मिन् पद्य आदित्यपदेन परमशब्दविशेषणादेष एवाभिप्रायः सूचितो भवतीति ॥

मूलाधाराद्धुतवहकलामिश्रितं भूर्भुवःस्वर्ब्रह्मस्थानात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः शशिकलमये धीमहीत्येकरूपं धियो यो नः पिबतदमृतं चोदयान्नः परं तदिति पद्येन लौगाक्षिणा देहाभ्यन्तरे गायत्रीमंत्रोपासना प्रकारान्तरेण ग्रथिता प्रकाशिता चेति शिवम् ॥

गायत्रीमन्त्रार्थविवृतिः समाप्ता ॥ शुभम् ॥

महानन्देन सुधिया विदुषां परमाणुना ।
गायत्रीमन्त्रविवृतीरचिता ब्रह्मतुष्टये ॥